# डाक्टर विधान

## शोक सन्तप्त अपार समूह द्वारा श्रद्धांजलि

### पश्चिमी बंगालमें शोक सप्ताह

कलकत्ता, २ जुलाई। भारत रत्न एवं पश्चिमी बंगालके लोकप्रिय मुख्यमन्त्री डाक्टर विधानचन्द्र रायका शव अंतिम संस्कारके लिए विधान सभाके प्रांगणसे राष्ट्रिय

श्मशानपर रहा तब तक दर्शनार्थियों का तांता वहीं लगा रहा।

## १० लाख व्यक्ति सम्मिलित

### डाक्टर राय की शव यात्रामें

कलकत्ता, २ जुलाई। डाक्टर राय की शव यात्रामें १० लाख व्यक्ति सम्मिलित हुए। पूरा कलकत्ता शोकाभिभूत हो उठा है। शव यात्रा में राष्ट्रपति, रक्षा मंत्री, कानून मंत्री आदि सम्मिलित थे।

### सहयोग पर अधिक जल

अल्जीर्स। अल्जीरिया की ९५ प्रतिशत जनताने मतदानमें भाग लिया बहुमतने फ्रांस एवं अल्जीरिया के सहयोग के पक्ष में मतदान किया।

ॐ

# श्रीमदय्यप्पगीता

---

ग्रन्थकर्ता

**श्रीस्वामी अच्युतानन्दः**

---

प्रकाशकः

**श्री स्वामी माधवानन्दः**

श्री तिलभांडेश्वर मठ, काशी।

संख्या २००० ]                [ वि० सं० २०१०

ॐ

गणेशं शारदां देवीं पम्पाम्पन्तलभूपतिन् ।
शास्तारं शबरीं व्याघ्रं प्रणमामि जगद्गुरुम् ॥



यपाद स्वामी नारायणगिरिशिष्य स्वामी अच्युतानन्दजी महाराज.
मु० काशी.

ॐ

॥ श्रीकृष्णो विजयतेतराम् ॥

नमः श्री राघवानन्द-पदपङ्कजरेणवे ।
यत्कृपालवमात्रेण अहमज्ञोपि तारितः ॥

# ॥ श्रीमद्भगवद्गीताष्टकम् ॥

वेदार्थतत्वनिपुणैः सदसि प्रगीताम्
अज्ञानतान्तपटलं परिकर्षयन्तीम् ।
विज्ञानसूक्तिभिरलंकृतगात्रशोभां
गीतां भजामि सततं जगदर्कवर्णाम् ॥१॥
श्रीकृष्णसुन्दरमुखप्रभवां सुशीलाम्
आदौ सुधीररणकर्कशजिष्णुपीताम् ।
विज्ञानतत्वनिचयां निगमैकवेद्याम् ।
गीतां भजामि सततं सकलार्थसाराम् ॥२॥
श्रीशङ्करादिकृतभाष्यपवित्रसूक्तिः
अद्वैतवादशिशिरीकृतमञ्जुवाणी

सुश्लोकसप्तशतनिर्मितपुष्पवल्ली
गीता करोतु विमलं कलुषं मनो मे ॥३॥
शान्तिप्रवाहमधुराक्षरयुक्तिपूर्णा
दुष्टप्रतर्कवनभक्षणकाननाग्निः ।
शीतांशुवर्षणकरी भवती प्रसिद्धा
गीता सदा वसतु मे हृदये प्रसन्ना ॥४॥
पीत्वा न तृप्तिमगमन् मुनयो न सिद्धाः
विद्याधरासुरनराधिपसार्वभौमाः ।
संगीतशास्त्रगुणमण्डितपण्डितौघाः
यत्सारमच्युतमुखप्रभवं विशुद्धम् ॥५॥
मातर्महामहिमशालिनि विश्ववन्द्ये
संसारजन्ममृतिरोगविनाशशीले ।
निर्वाणमुक्तिमुकुटीकृतभावदात्रि
गीते मदीयरसनानिलये वस त्वम् ॥६॥
यादित्यचन्द्रकिरणैरपि दुर्विभाव्यम्
मोहात्मकं तिमिरमाशु जनप्रविष्टम्

दूरीकरोषि दुरितं वचसा मनोजम्
तामीश्वरीं भगवतीं प्रणमामि गीताम् ।।७।।
दृष्टं न शास्त्रनिगमेषु समं भवत्याः
माधुर्यवाक्यकलिताक्षरभावपूर्णम् ।
वेदान्ततत्त्वमणिमण्डितनिर्विकल्पम्
अत्र त्वमेव जयतान्नितरां सुगीते ! ।।८।।
गीताष्टकमिदं प्रोक्तमच्युतानन्दभिक्षुणा ।
यः पठेद्भक्तिभावेन तस्य गीता प्रसीदति ।९।

इति श्री स्वामि अच्युतानन्दकृतम्
श्रीमद्भगवद्गीताष्टकं सम्पूर्णम्

॥ ॐ ॥

## ॥ शरणमय्यप्प ॥

सम्बुध्यर्थाऽयिशब्दप्रकटित-
महिमा सानुरागं समन्तात् ।
यो भूयोऽपः प्रपाति प्रणत-
सुरनरानाशुशोकार्णवेभ्यः ॥
यश्शास्ता सर्वभूतं निजजन-
सुखरा भीतिराशीन् हिनस्ति ।
अय्यप्पन्तन्नमामो हरिहर-
तनयं बोधसौंदर्यगात्रम् ॥१॥
जीवनेन विना जीवा न जीवन्ति जगत्त्रये ।
ततो जीवनगोप्तारमय्यप्पं प्रणमाम्यहम् ॥
वैष्णव्यां मोहिनीदेव्याम्मृडवीर्येण तेजसा ।
पुरा बभूव चाय्यप्पो धर्मरक्षणहेतवे ॥



प्रत्यङ्ङात्मस्वरूपे दृढतरकृतचिन्मुद्रया भद्रया हि
सिद्धश्रीवस्त्रबन्धे स्थिरतरविधिना संस्थितश्शान्तमूर्तिः ।
वाराणस्यां महत्यां स्वचरणरजसा पावयन् भक्तवर्गान्
अय्यप्पो धर्मशास्ता विलसति सुचिरं केशवेशात्मजोऽयम् ॥

पुरासीत्पन्तलो भूपः प्रजापालनतत्परः ।
प्रसिद्धः केरले देशे भक्तो भक्तजनप्रियः ॥
एकदा तु महारण्ये मृगया सम्भ्रमन्नृपः ।
दिव्यं तं बालकं वीक्ष्य नयनानन्दमाययौ ॥
शुद्धस्फटिकसंकाशं कर्णान्तगतलोचनम् ।
प्रस्फुरन्मञ्जुचन्द्रास्यं मायानिर्मितविग्रहम् ॥
शान्तस्वरूपं सरितामधीश्वरे
बालं शयानं प्रलये सुरेश्वरम् ।
तम्पुण्डरीकाक्षमिव स्थितं परम्
सस्वर्णहारं विपिने विलोकने ॥७॥
दिव्यं तं बालकं नीत्वा राजा स्वगृहमाययौ ।
लालितः पालितस्तेन विशेषेण जनप्रियः ॥
स वृद्धिमगमत्तत्र शुक्लपक्षे यथोडुराट् ।
मापजोऽतिविशालाक्षः समुद्रकरशोभितः ॥
सुतस्य लीलापटुतां विलोकयन्
सर्वेप्रसन्ना भुवितस्य भूपतेः ।

तद्द्रोहिणं मन्दमतिं तु मन्त्रिणम्
अज्ञातभावञ्च विना निरीक्षरम् ॥१०॥
अपुत्रस्य सुतो जातः अय्यप्पस्य प्रभावतः ।
तेन पुत्रवती जाता राज्ञी राजमनोरमा ।११।
दुर्मन्त्री मन्त्रयामास मर्मवाक्यगणैरलम् ।
राज्ञ्यै पन्तलराजस्य कैकय्या इव मन्थरा।१२।
युवराजपदे राजा चाय्यप्पस्याभिषेचनम् ।
करिष्यति सुशीलस्य शूरवीरस्य साम्प्रतम् ॥
त्वत्पुत्रोपस्थितौ देवि परपुत्रस्य शासनम् ।
कथं सहे विशालाक्षि स्वदेशस्य दुरात्मनः ॥
तद्विघ्नस्तु त्वया कार्यो युवराजाभिषेचने ।
नचेदय्यप्पदासत्वं त्वत्पुत्रस्योररीकुरु ॥१५॥
उपायं कथये तुभ्यं तस्य विघ्नकरं परम् ।
कुक्षौ मे शूलपीडास्ति चेतिराज्ञे निवेदय ।१६।
अहं कपटवैद्यानां मेलनं कारये तव ।
तैस्तु वर्णितभैषज्यं शार्दूलीपय एव हि ।१७।

वैद्योक्तं तु नृपं गत्वा कथयिष्यामि शोभने ।
राज्ञीपीडानिवृत्यर्थं शार्दूलीपय औषधम् १८
अनेन विधिनादेवि चाप्यप्यस्य विनाशनम् ।
भवेत्तत्क्षीरलाभाय गमने गिरिकानने ।१९।
अप्येतदहितं वाक्यं हितं मत्वा तु भामिनी ।
कापट्यं दर्शयामास स्वपत्युस्सन्निधौ सती २०
कुक्षौ शूलरुजं निरूप्य रमणी
भूपस्य पार्श्वं गता ।
व्याघ्रीस्तन्यरसेन शूलशमनं
सम्बोधयन्ती शुचा ॥
सत्यं तद्वचनं विचार्य नृपतिः
स्तन्याय संसेवकान् ।
सर्वत्राशु दिशासु तत्क्षणमहो
सम्प्रेषयन्प्रोक्तवान् ॥२१॥
शार्दूलप्रवरेभसेवितवनं
गत्वा तु यूयं भटाः ।

शार्दूलीपयसो हरेत सुचिरं
राज्ञीमनोमोदकम् ॥
अप्राप्तं यदि तत्पयोऽश्वकदिना-
दूर्ध्वं भवन्तो गृहान् ।
आयास्यन्ति तदा भवेन्मदसिना
पञ्चत्वमत्रैव वः ॥२२॥
राजाज्ञाञ्च निशम्य भीतिमगमन्
सर्वे च तत्सेवकाः ।
भीतान् सर्वजनान् निरीक्ष्य भगवान्
प्रोवाच तत्र स्थितान् ॥
यूयं स्वीयगृहेषु तिष्ठत सुखं
गच्छाम्यहं केवलम् ।
शार्दूलीस्तनजन्यशुभ्रपयसा
सन्तोषये स्वामिनम् ॥२३॥
शूराणां कुलभूषणं निखिलवि-
च्छास्ता स्वधर्मस्य च ।

अय्यप्पो भगवान् दयापरवशो
गन्तुं वनं निर्ययौ ॥
मार्गे भक्तजनैः समर्चिततनोः
कान्त्या तमः संहरन् ।
सह्याद्रेः पुलिनं पुरा सुविमलं-
प्राप्तःपरार्थेच्छया ॥२४॥
तस्मिन्काननमध्यदेशविलस-
च्छायां गतश्छागिनाम् ।
शङ्खं पूरितवान् मुकुन्दतनयः
पाणौ स्थितं तत्क्षणम् ॥
व्याघ्रास्तस्य निशम्य निष्ठुरतराः
शब्दं समन्तादहो ।
वव्रुस्तं सुरनायकं व्रजवने
गोपीकुमारं यथा ॥२५॥
श्रीकृष्णस्तु यथा व्रजाद्रिविपिने
गोभिश्च संवेष्टितः ।

लक्ष्मीः सत्कमलोदरे भगवती
भृङ्गैरलं वेष्टिता ॥
चन्द्रश्चन्द्रिकया च सूर्यकिरणै-
रग्निस्तु धूमव्रजैः ।
अय्यप्पश्च सुपुण्डरीकनिकर-
र्वन्यैरसंख्यैश्चिरम् ॥२६॥

श्रोत्रादीन्द्रियपुण्डरीकदमने
दक्षस्तु योगी जनः ।
अय्यप्पो ह्युभयोरलं सुदमने
दृष्टप्रमाणं गतः ॥
कर्षन् व्याघ्रकुलं मतङ्गसहितं-
वर्णी सदा शासकः ।
सारासारविचारनीतिनिपुणः
श्रीपन्तलं प्राप्तवान् ॥२७॥

आश्चर्यं खलु पन्तलस्य नगरी
संवेष्टिता सर्वशः ।

व्याघ्रादिप्रवरैः प्रसारितनखै
र्वन्यैर्महानिष्ठुरैः ॥
अध्यक्षस्तु जहास भूमिपतितान्
प्राणावशेषान् जनान् ।
दृष्ट्वा मन्त्रिगणश्च राजमहिषी
राजा च मोहं गतः ॥२८॥
निश्शब्दां नगरीं विलोक्य दयया
सत्वं गृहीत्वा वनम् ।
क्षिप्रं सोऽपि ययौ ततः शिवसुतः
सह्यस्य मूर्ध्नि स्थितम् ॥
यत्राद्यापि समाधियोगकलितो-
जेगीयमानो जनैः ।
धर्मायाद्रिनिकेतने प्रतिदिनम्
संचेष्टयन् वीक्ष्यते ॥२९॥
नारदस्तु समायातो राजशेखरपत्तने ।
शम्भोस्तनयवृत्तान्तं सर्वं तस्मै न्यवेदयत ३०

गणेशः कार्तिकेयश्च अय्यप्पो मोहिनीसुतः ।
शङ्करस्य त्रयःपुत्राः पितृतुल्यपराक्रमाः ।३१।
मायामानुषरूपेण त्वद्दास्यमुररीकृतम् ।
हरिशङ्करभक्तानां कलहं वीक्ष्य भूतले ॥३२॥
तयोर्भेदनिरासाय चावतीर्णो विशांपते ।
कपटं तव भामिन्या कारितं देवमायया ३३
मनुष्यबुद्धिमय्यप्पे त्यक्त्वा देवत्वमाचर ।
तेन ते कीर्तिरत्यन्ता भविष्यति महीतले ।३४।
देवर्षेर्वाक्यमाकर्ण्य ज्ञातं तद्वैभवं पुनः ।
दर्शनायाथ देवस्य प्रयत्नं कृतवान् तदा ३५
अय्यप्पस्य वियोगेन दुःखितः पन्तलः प्रभुः ।
जलान्नानि परित्यज्य स शिश्ये स्थण्डिले चिरम्
स्वरूपं दर्शयामास अय्यप्पोऽपि महामनाः ।
मा शोकं कुरु भूप त्वं वसामि शबरीगिरौ ।३७
कुम्भसम्भवमाहूय यज्ञं कारय यत्नतः ।
मदीयं मन्दिरं तत्र कारयेर्विश्वकर्मणा ॥३८॥

तन्मध्ये विग्रहं रम्यं पञ्चलोहेन कारय ।
तस्मिन्प्रतिष्ठा कर्तव्या ऋषिभिर्वेदपारगैः ३६
अवश्यं मम सान्निध्यं भवेत्तत्र न संशयः ।
एतेन विधिना राजन् मयि भक्तिः प्रजायते ॥
प्रतिवर्षेन्तु संक्रान्तौ माघमासस्य पार्थिव ।
महोत्सवस्त्वया कार्यः सह्यपृष्ठे ममाश्रमे ४१
आगमिष्यन्ति ये तत्र चोत्सवे ममसन्निधौ ।
सर्वे ते सुखिनो भूप भविष्यन्ति न संशयः ४२
नारिकेलं च कर्पूरं पुष्पदीपादिपानकम् ।
एतानि प्रियवस्तूनि पूजने मम भूपते ।४३।
घृतस्नानेन सन्तुष्टो भविष्यामि विशेषतः ।
गोपयोमथितेनाशु पुनः पञ्चामृतेन च ।४४।
धर्मभ्रष्टास्तु या नार्यः पांशुला दोषदूषिताः ।
तासां नैवाधिकारोस्ति प्रवेशे मम सन्निधौ ४५
पुरुषाणां गृहस्थानां ब्रह्मचर्यञ्च मण्डलम् ।
विधीयते प्रवेशार्थमुत्सवे दर्शने मम ॥४६॥

सदा हि दर्शनं पुण्यं माघमासे विशेषतः ।
मयि भक्तिश्च लभते ततः शोकं परित्यज ४७
इत्युक्त्वान्तर्दधौ देवो वसतौ पन्तलप्रभोः ।
अथ दर्शनसन्तुष्टो देवदेव शिवात्मनः ।४८।
अय्यप्यतत्वविज्ञानी जातः पन्तलभूपतिः ।
गतशोकोऽतिधर्मात्मा भक्तस्तस्य महात्मनः
यदुक्तं देवदेवेन कुम्भसम्भवयोगतः ।
तेन पन्तलभूपेन तत्सर्वं कृतमादरात् ॥५०॥
देवदानवगन्धर्वाः सिद्धचारणगुह्यकाः ।
आजग्मुर्दर्शने तस्य ऋषयोनारदादयः॥५१॥
ईडिरेऽस्य यशोराशीनय्यप्पस्य महात्मनः ।
जातकौतुकरूपास्ते मणिकण्ठावलोकने ।५२।

इति श्रीमदय्यप्पगीतायां अय्यप्पयोगो
नाम प्रथमोऽध्यायः ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

शबरस्य गृहे जाता शबरी भाग्यशालिनी ।
चिरकालेन सह्याद्रौ ज्ञानाय तपसि स्थिता ॥१॥
मोक्षेच्छया च सम्पन्ना शमादिगणशोभिता ।
नित्यानित्यविवेकेन फलभोगविरागतः ॥२॥
सुशीला च सुरूपा च सुन्दरी चारुभाषिणी ।
प्रसन्नवदनाम्भोजा गुरुभक्तिपरायणा ॥३॥
आस्वाद्य पुष्पनिर्यासमुन्मत्ता भ्रमराङ्गना ।
तथा भक्तिरसेनेयं मत्ता सा शबरी वने ॥४॥
वाचक्नवीव सा पूर्वं याज्ञवल्क्यं शुचिस्मिता ।
जन्ममृत्युभिया देवी शास्तारं शरणं ययौ ॥५॥
पटबन्धासने शुद्धे स्थितं काञ्चनसन्निभम् ।
सम्पूज्य भूरिपुष्पेण पप्रच्छ त्वंपदस्थितिम् ॥६॥

श्री अय्यप्प उवाच

आत्मा जीवस्तु गोस्वामी कर्ता क्षेत्रज्ञ इत्यपि ।
विश्वश्च तैजसः प्राज्ञस्त्वं पदेन प्रकाशिताः ॥७॥

न जायते म्रियते वा कदाचि-
दात्मातु देहे विमलप्रकाशः ।
प्रज्ञानराशिःपुरुषः पुराणः
आकाशकल्पोऽविकृतोऽप्रमेयः ॥८॥
अवस्थात्रयवस्तूनि वेत्त्यसौ करणं विना ।
सौषुप्तस्थमभावञ्च शृणु त्वं ब्रह्मचारिणि ॥९॥
नाहं जानामि चेत्यत्र ज्ञानमेव प्रकाशते ।
अहं जानामि चेत्यस्मिन् वाक्येऽपि ज्ञानमुच्यते
ज्ञानधारा त्वविच्छिन्ना वीक्ष्यते तत्वदर्शिभिः।
नोदेति नास्तमेत्येषा सैवात्मात्वं विचारय ११
यथा दधिगतं सर्पिस्तिलेषु च रसो वरः ।
पुष्पेषु पुष्पनिर्यासआत्मा देहे व्यवस्थितः१२
नित्यः सर्वगतोऽनन्तः सत्तामात्रैकगोचरः ।
शाश्वतोऽतिपुराणोयमचलोऽयं सनातनः १३
सव्यान्याक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः।
हृद्देशे तु पुनः प्राज्ञस्त्रिधा देहे व्यवस्थितः।१४।

स्थूलभोगेन विश्वस्य सूक्ष्मेण तैजसस्य च ।
आनन्देन तु प्राज्ञस्य त्रिधा तृप्तिं निबोधय१५
शास्ता गोस्वाम्यहं देहे कर्ताहमिति मां विदुः ।
ये जनास्ते तु जीवज्ञाः पण्डितास्तत्वदर्शने१६
श्रीकृष्णोऽहं शिवःसाक्षीक्षेत्रज्ञश्शाश्वतोस्म्यहम्।
अय्यप्पोहमनन्तोऽहमात्मारामोऽहमच्युतः१७
त्वंपदस्य तथावाच्यो लक्ष्योऽहं प्रकृतेः परः ।
सच्चिदानन्दरूपोऽहं विश्वात्माविश्वसंभवः १८

इति श्रीमदय्यप्पगीतायां अय्यप्पशबरीसंवादे
शास्तृयोगो नाम द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

शबरी उवाच

व्यवहारे सदा सर्वैर्भेदतो युष्मदस्मदी ।
प्रयुज्येते सदा योगिन्नभेदः कथमेतयोः ॥१॥

श्री अय्यप्प उवाच

अहं त्वमिति निर्देशे द्वैतमेव प्रकाशते ।
सोऽहमित्यपि निर्देशे चाद्वैतं प्रतिपाद्यते॥२॥

शिवो भवति पूजारिः वन्दते च शिवं शिवः ।
अशिवः को भवेत्कर्ता शिवः कर्म कदा भवेत्।३

अद्वैतचिन्तापरमेशभक्ति-
द्वैतस्यनिन्दा विषये विरक्तिः ।
मनोजवं बाधितुमात्तशक्ति-
र्यस्यैव तस्यैव जनस्य मुक्तिः॥४॥

माण्डूक्यश्रुतिगीतेन तत्वेनात्मा प्रपद्यते ।
द्वैतजातं तथा सर्वं गगने नीलिमादिवत् ॥५॥

आत्मानमखिलाधारमवाङ्मनसगोचरम् ।
अव्यक्तं निर्गुणं सत्यं मत्वाधीरो न शोचति ॥

मेघो नश्यति वर्षेण भोजनेन तथा क्षुधा ।
द्वैतं नश्यति बोधेन यथा स्वप्नमनोरथः ॥७॥

ब्रह्माभिन्नं जगन्नास्ति नास्ति जन्मजरामृतिः ।
सुखदुःखादिकं नास्ति अस्तिब्रह्मनिरामयम् ८

प्रपञ्चरहितं विष्णुं निरीहं निरुपद्रवम् ।
निरञ्जनं निराकारं मत्वा धीरो न शोचति ।९।

यथा पटगतं चित्रं पटादन्यन्न विद्यते ।
तथाचात्मगतंविश्वमात्मनोऽन्यन्न विद्यते॥१०।
मायामलिनसत्वेन कल्पितां भेदभावनाम् ।
मायायाःशुद्धसत्वेन दूरीकुरु महामते ॥११॥
ब्रह्मा विष्णुः शिवः शक्तिर्जीवोगणपती रविः ।
देवतान्नश्च प्राणादिर्मायया खलुनिर्मितम् १२
जीमूतेन विना वृष्टि र्भूतलेन विना कृषिः ।
मायया च विनासृष्टिः पयसा रहितं दधि।१३।
तावज्जननसम्भीतिः पुरुषस्य विशेषतः ।
आत्मानमजरं नित्यं यावन्नैवावगच्छति ।१४।
शुष्कतर्कविवादेन व्यर्थं नयति पूरुषः ।
कालंकालाहिनात्मानं कोऽन्यस्त्रातुमिहेश्वरः।
अध्यात्मचिन्तया नूनं सत्सङ्गेनाथ विद्यया।
यतेत स्वात्मलाभाय धीरो मोक्षपरायणः।१६।
विचारेणविनादेवि प्रपञ्चो नहि नश्यति ।
तस्माद्विचारः कर्तव्यः स्वात्मलाभस्य हेतवे ॥

इयं वेदशिरोविद्या प्रोक्ता दुःखनिवृत्तये ।
अनया विलयं याति सञ्चितं कर्मयत्कृतम् १८

इति श्रीमदय्यप्पगीतायामय्यप्पशबरीसंवादे
अध्यात्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## ॥ अथ चतुर्थोऽध्यायः ॥

मणिकण्ठोपदेशेन न तृप्ता वनचारिणी ।
भूयः पप्रच्छ सम्पूज्य मायामनुजविग्रहम् १

शबरी उवाच

कर्मशान्तिर्मनश्शान्तिर्वासनाक्षय एव च ।
कथं भवेत्सरोजाक्ष अय्यप्प वदतांवर ॥२॥

श्री अय्यप्प उवाच

भक्तिज्ञानविरागेण विचारेण च शोभने ।
त्रयमासाद्यते देवि अथवा गुरुसेवया ॥३॥
भजनं भक्तिरित्याहुर्निर्गुणे सगुणेऽपि च ।
ईश्वरे चारविन्दाक्षि मायाविनि वनेचरि ४

श्रवणं कीर्तनं तस्य चार्चनं पादसेवनम् ।
वन्दनं स्मरणं देवि सख्यञ्चात्मनिवेदनम् ५
नवधा सगुणे प्रोक्ता सप्तधाऽगुणशालिनी ।
सर्वोपकारिणी नूनं सेवनीया प्रयत्नतः ॥६॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ७
बीजाद्वृक्षस्ततो बीजं भक्तेर्ज्ञानं ततश्च सा ।
साधूनां सङ्गतिर्बीजं भक्तिवृक्षस्य भामिनि ८
भक्तिज्ञानविरागाणां वर्षयन् जगतीतले ।
चरतीह महाभागो नभोमण्डलमेघवत् ॥९॥
छायापुष्पफलैश्शाखी सेवते शरणागतान् ।
साधुस्त्वनागतांश्चापि भक्तिज्ञानधनादिभिः
सज्जनो दुर्जनश्चेति भेदतो मन्यते जनः ।
सर्वञ्च स्वजनं साधुर्मन्यतेऽभेदचिन्तया ११
दहनात्मप्रकाशेन सूर्यो वारयते तमः ।
वचोभिश्शीतलैस्साधुर्हृत्स्थं वारयते हि तत् १२

जन्मक्लेशो जराक्लेशः क्लेशो दुर्जनमित्रता ।
शम्भोर्भजनमक्लेशः क्लेशो भूरिधनस्पृहा ।१३।
मद्भक्तं दयया युक्तं धर्मात्मानं शुभे भज ।
भक्तिशास्त्रप्रवक्तारं सन्तं सन्ततमादरात् १४
यतितीर्थं सतीतीर्थं तीर्थं साधुसमागमः ।
वेदवाक्यं सदातीर्थं नान्यत्तीर्थं भजेन्नरः १५
पूजा विप्रस्य कर्तव्या चान्नवस्त्रजलादिभिः ।
विप्रस्यैव प्रभावेण तरेत्संसारसागरम् ॥१६॥
सूर्योदयं विना देवि शर्वरी न प्रयास्यति ।
विना भक्त्युदयं नृणामहंकारो न यास्यति १७
आत्मवत्प्रेम कर्तव्यं सर्वप्राणिषु निर्मले ।
तस्य पावनभावेन संसारं तारयेज्जनः ।१८।
मदात्मकं जगत्सर्वं वीक्ष्य मत्पूजनं कुरु ।
मन्मना मन्नमस्कारा पत्रपुष्पफलादिभिः ॥

॥ इति श्रीमदय्यप्पगीतायां अय्यप्पशबरीसंवादे भक्तियोगो नाम चतुर्थोऽध्यायः ॥

## ॥ अथ पञ्चमोऽध्यायः ॥

श्रीअय्यप्पउवाच

परोक्षञ्चापरोक्षञ्च द्विविधं ज्ञानमुच्यते ।
वैदिकं लौकिकञ्चेति तदपि द्विविधं भवेत् ॥
वेदे परोक्षं प्रायेणानुमानादौ च लौकिकम् ।
अपरोक्षं महावाक्ये लौकिकन्तु घटादिषु ॥
तत्रापि द्विविधं प्रोक्तं दृढं चाप्यदृढं शुभे ।
अपरोक्षं दृढं ज्ञानमलं निःसृतिहेतवे ॥३॥
अस्तिब्रह्मेति यज्ज्ञानं परोक्षं परिकीर्तितम् ।
अखण्डानन्दरूपोऽहं शिवोऽहमितिचापरम् ॥
अभेदेऽपि च भेदोऽस्ति जीवात्मपरमात्मनोः ।
तुषारजलभेदोऽपि विद्यते जगतीतले ॥५॥
अभेदबोधो विमलो भेदो मायाप्रकल्पितः ।
विद्याविद्यास्वरूपेण व्यापिनी सा च मोहिनी
शरणागतिहीनस्य नरस्य दुरतिक्रमा ।
शरणागतभक्तस्य माया दूरनिवासिनी ॥७॥

ज्ञानेन सदृशं लोके पावनं न हि भामिनि ।
तत्स्वयं योगसंसिद्धहृदये जायते शुभे ॥८॥
अभेददर्शनं ज्ञानमज्ञानं भेददर्शनम् ।
आद्यं स्यान्मोक्षलाभाय द्वितीयं जन्ममृत्यवे ॥
गवामनेकवर्णानां क्षीरस्यैवैकवर्णता ।
क्षीरवत्पश्यते ज्ञानं लिङ्गिनस्तुगवां यथा ॥
निष्क्रियं वासनाहीनं भेदत्रयविलक्षणम् ।
आत्मानं वेद वेदेन सद्गुरोश्चिरसेवया ।११।
आदौ नास्तिहि यद्वस्तु चान्तकालेऽपि नास्ति तत्
मध्यकाले कथं जातं रज्जुसर्प इवास्थितम् ॥
ताप्यतापकभेदेन सुविभात्यखिलं जगत् ।
प्रत्यगात्मतया भाति ज्ञानाद्वेदान्तवाक्यजात्
शुद्धमीश्वरचैतन्यं जीवचैतन्यमेव च ।
प्रमाता च प्रमाणश्च प्रमेयश्च फलं तथा ।१४।
इति सप्तविधोभेदश्चैतन्ये व्यवहारतः ।
सुविजानीहि देवित्वं वर्तते नतु सत्यतः ।१५।

॥ शवरी उवाच ॥

कथं सप्तविधोभेदः प्रत्यगात्मनि शाश्वते ।
भगवन् सर्ववेदज्ञ सर्वं वर्णय सद्गुरो ॥१६॥

॥ श्री अय्यप्प उवाच ॥

मायोपाधिविनिर्मुक्तं शुद्धमित्यभिधीयते ।
मायासम्बन्धतश्चेशो जीवश्चाविद्यया युतः १७
प्रमातृचैतन्यमपि प्रसङ्गतः
प्रमाणचैतन्यमतः परं शुभे ।
निरूप्यतेऽन्तःकरणेन संयुतम्
अन्यच्च तद्वृत्तियुतं प्रमाणकम् ॥१८॥
अज्ञातमपि चैतन्यं प्रमेयमिति कथ्यते ।
फलं प्रोक्तं सुविज्ञातं चैतन्यं श्रुतिसम्मतम् १९
इति सप्तविधो भेदश्चैतन्ये व्यवहारतः ।
ऐक्यं ब्रह्मणि सर्वस्यानैक्यं भवति मायया ।

इति श्रीमदय्यप्पगीतायां अय्यप्पशवरीसंवादे
ज्ञानविज्ञानयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

# ॥ अथषष्ठोऽध्यायः ॥

श्री अय्यप्पउवाच

दृष्टानुश्रविकेष्वेष विषयेषु शुभप्रदः ।
वितृष्णस्य वशीकारसंज्ञा वैराग्यमुच्यते ।१।
तरणीव तु वैराग्यं तरुणि भवसागरे ।
तरणाय दृढा नूनं गुणवैतृष्ण्यमप्यथ ॥२॥
अवश्यं गन्तारोऽधिकदिनमुषित्वापि विषयाः ।
वियोगे कोभेदस्त्यजति न जनोयः स्वयममून्
व्रजन्तःस्वातन्त्र्यादतुलपरिदुःखाय मनसः ।
स्वयंत्यक्त्वा ह्येते शमसुखमनन्तं विदधति ३
अनेककालेस्वर्गीयान्भोगान् भुक्त्वापिचाब्रवीत्
ऐलःसम्राड्विनिर्विण्णो गाथां वैराग्यकारिणीः
किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।
किं विविक्तेन मौनेन स्त्रीभिर्यस्यमनोहृतम् ।५।
स्वार्थस्याकोविदंधिङ्मां मूर्खपण्डितमानिनम् ।
योऽयमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ।६।

शिवप्रसादोनिर्वेदः सुखशान्तिप्रदो महान् ।
येनानुबन्धंनिर्हृत्य पुरुषः शममृच्छति ॥७॥
तीव्रवैराग्ययोगेन धर्ममेघः समाधिराट् ।
कालज्ञस्य निरीहस्य योगिराजस्य जायते ।८।
समाधौजातमात्रे तु समुदेत्यात्मचन्द्रमाः ।
वर्षयन्निवपीयूषं क्षुभिताम्भोधिमध्यगात्॥६॥
मातापितृसुतादीनामस्तित्वं नास्ति चात्मनः ।
व्यर्थं विषयगर्तेषु पतन्ति सुरमानवाः ॥१०॥
मोषणे ज्ञानरत्नानां प्रविष्टा देहपत्तने ।
कामःक्रोधोमदोलोभोदेहिनामविवेकिनाम् ११
माता कस्य पिता कस्य कस्य भार्य्याप्रियेवद ।
जन्माभावेतु मातृत्वं पितृत्वञ्चात्मनःकथम् ॥
हरिणश्च गजोमत्तः पतङ्गश्चापि भृङ्गराट् ।
एकैकविषयोन्मत्ता म्रियन्ते शफरी पुनः ।१३।
विषयेष्वपि सर्वेषु मत्ता मरणधर्मिणः ।
जीवन्तिकथमल्पेऽपि चेत्याश्चर्यं हि मानवाः ॥

मानवस्य शरीरं हि न जातं क्षुद्रकर्मणे ।
कृच्छ्राय तपसे चैव प्रेत्यानन्तसुखाय च ।१५।
वैराग्यन्तु विना देवि भक्तिमार्गोपजीविनः ।
ते यथासुखमिच्छन्तिमरीचिजलमज्जनात् १६
कामिनीकाञ्चनत्यागी त्यागी भवितुमर्हति ।
व्याघ्रचर्मावृतेनैव खरो नास्ति मृगेश्वरः ॥१७।

कनकघटपटानां स्वच्छमुर्वीरुहाणां
पनसपरिमलानामन्धसां भाजनानाम् ।
गजतुरगभटानां वर्जनं वर्जनं नो
अपितु सुयुवतीनां वर्जनं वर्जनं स्यात् ॥

इति श्रीमदय्यप्पगीतायां अय्यप्पशबरीसंवादे
विरागयोगोनामषष्ठोऽध्यायः ॥ ६ ॥

# ॥ अथ सप्तमोऽध्यायः ॥

श्रीअगस्त्य उवाच

कोऽहं कथमिदं जातं को वा कर्तास्य विद्यते।
उपादानं किमस्तीह विचारोऽयं विधीयते १

विनिश्चयो भवेन्नित्यानित्यवस्तुविवेकतः।
नित्यबोधस्वरूपोऽहमात्माहं प्रकृतेः परः।२।

प्रकृतिश्च प्रधानञ्च माया गुणवती तु या।
विद्याविद्यास्वरूपेण व्यापिनी जगदम्बिका ३

प्रकृतिर्विकृतिश्चैव भवेत्तन्मात्रपञ्चकम्।
अहंकारमहत्तत्त्वे मूला चाविकृतिस्स्वयम्।४।

महत्तत्त्वादहंकारस्ततस्तन्मात्रपञ्चकम्।
भूतात्मकं ततो जज्ञे व्योमादिजगदात्मकम् ५

ज्ञानकर्मेन्द्रियाणिस्युर्दशैकञ्च मनस्स्मृतम्।
विकाराः षोडश प्रोक्तास्ततोऽन्यः पुरुषस्स्मृतः

मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ।७।
ऊर्णनाभिर्वं विश्वस्य कारणं परमेश्वरः ।
उपादानं निमित्तश्च वैलक्षण्यन्तु सांख्यतः ८
क्लेशकर्मविपाकाद्यैरपरामृष्ट ईश्वरः ।
पुंविशेषोऽत्र योगेऽपि पुरुषोत्तम उच्यते ॥९।
ईश्वरस्सर्वभूतानां शबर्यात्मनि तिष्ठति ।
विहितप्रतिषिद्धेषु प्रवृत्तिष्वपिप्रेरयन् ॥१०।
ब्रह्म केवलमद्वैतं न यत्करणगोचरम् ।
अलक्षणमरूपञ्च वेदान्तेषु सुनिश्चितम् ।११
तद्विष्णुस्तच्छिवस्साक्षादादित्यस्तच्चचन्द्रमाः
तदेव शाश्वतं सत्यं तदहं त्वञ्च भामिनि ।१२
विम्बत्वं प्रतिविम्बत्वं यथा पूषणि कल्पितम्
जीवत्वमीश्वरत्वञ्च तथा ब्रह्मणिकल्पितम् १
मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः
शमो विचारस्सन्तोषश्चतुर्थस्साधुसंगमः।१४

विचारेण विनादेवि नान्योपायोऽस्ति सौकरः
जिज्ञासोरात्मलाभाय वेदेवादे च मानिनि १५
इदं सर्वं जगद्वस्तु रज्ज्वां सर्प इवात्मनि ।
जन्ममृत्युयुतं शान्ते हाटकेकटकादिवत् १६
जलन्न पुनरायाति सुपीतमयसा खलु ।
द्वैतन्न पुनरायाति चाद्वैतेन सुबाधितम्॥१७॥
ब्रह्मसत्यं जगन्मिथ्या मायामयमनादिमत् ।
सुविचारेण यत्सत्यं तदात्म त्वं मनीषिणि ॥

इति श्रीमदय्यप्पगीतायां अय्यप्पशबरीसंवादे
विचार योगोनाम सप्तमोऽध्यायः ॥७॥

---

## ॥ अष्टमोऽध्यायः ॥

अय्यप्पगीतां सुश्रोतुं नारदादिमुनीश्वराः ।
सह्यपर्वतमायाता विनीताः पुष्पपाणयः ॥१॥
साधुसाध्वितिसम्बुध्या प्रणमन्तः परस्परम् ।
बन्धमोक्षव्यवस्थार्थमय्यप्प शरणङ्गताः ॥२॥

सुभगा शबरी श्रोत्री प्रणम्य हरिमातृकम् ।
जगाद वचनं तस्मै सखी दुःखेन दुर्मनाः ॥३॥
इयन्तु युवती देव मत्सखी चारुभाषिणी ।
विरौति पतिशोकेन सेवाभक्तिपरायणा ॥४॥
उपदेशामृतेनैनां सिञ्च त्वं त्रिजगद्गुरो ।
अन्योपायन्न पश्यामि शोकमोहनिवृत्तये ॥५॥

॥ श्री अय्यप्प उवाच ॥

किं रोदिषि वरारोहे भर्त्ता कुत्र गतस्तव ॥
जडेषु यदि भर्तृत्वं सर्वमेतज्जडात्मकम् ॥६॥
चैतन्ये यदि भर्तृत्वं चैतन्यन्तु त्वमेव हि ।
उभयोरपि भर्तृत्वमगतं किं वियुज्यते ॥ ७ ॥
माता कस्य पिता कस्य कस्य भार्या प्रियो व
जन्माभावे तु मातृत्वं पितृत्वञ्च कथम्भवेत्८
सर्वशोकान्परित्यज्य मामेकं शरणं व्रज ।
अहंत्वां सर्वशोकेभ्यस्तारयिष्यामि शोभने ९

मरणं प्रकृतिस्वभावतो विकृतिर्जीवनमम्बुजेक्षणे
यदि चाल्पमपिश्वसन्नसावसुभृङ्काग्यपरम्परावृतः
अतस्त्वं प्रभजात्मानं शान्तमव्यक्तमच्युतम्।
भयशोकविनिर्मुक्तं सर्वदुःखनिवृत्तये ॥११॥
सारासारविशेषज्ञाः परापरविदो जनाः ।
न शोचन्ति मृते देवि नापि शोचन्ति जीविते
शोकमोहौ जरा व्याधिःकामक्रोधदुरात्मताः ।
ममत्वञ्च वियोगश्च देहधर्मो न चात्मनि।१३।
सर्वं दुःखमयं विद्धि सुखं वैषयिकं हि यत् ।
संयोगेऽमृतमेवास्तु वियोगे विषमेव तत् १४
विषं हन्ति हि भोक्तारं द्रष्टारन्नास्ति हन्ति तत्।
द्रष्टारमपि भोक्तारं विषयो हन्ति तत्क्षणम्।१५
देहात्मबुद्धियोगेन लभन्ते जननम्मृतिम् ।
ब्रह्मात्मबुद्धियोगेन शाश्वतं पदमव्ययम्॥१६॥
परमानन्दचिन्मात्रमाद्यन्तरहितं शिवम् ।
निजस्वरूपमात्मानं भावयेच्छोकशान्तये १७

धर्मशास्त्रुपदेशेन शोकमोहविवर्जिता ।
प्रसन्नातिसुशीलासौ बभूव शबरीसखी ।१८।

इति श्रीमदय्यप्पगीतायामय्यप्पशबरीसंवादेनिर्ममयोगो नामाष्टमोऽध्यायः ॥

---

## ॥ अथ नवमोऽध्यायः ॥

॥ शबरी उवाच ॥

सर्वेषामपि मन्त्राणां को मन्त्रश्श्रेयसे प्रभो।
वद मामरविन्दाक्ष अय्यप्प विदुषां वर॥१॥

॥ श्री अय्यप्पउवाच ॥

हंसमन्त्रो महामन्त्रः प्राणमन्त्रोयमुच्यते ।
प्राणानां गतिमध्ये तु स्वयम्भूर्मन्त्रसम्मतः२
प्रपञ्चमतिविस्तीर्णं जराव्याधिसुपीडितम् ।
जन्ममृत्युजराव्याघ्रैर्नादितं गहनं वनम् ॥३॥
हित्वाब्रह्मणि संशुद्धे हन्तियातीतिविद्यया ।
अस्मिल्लोके सतां वृन्दैस्स हंस इति कथ्यते ४
व्यत्ययेन तु सोऽहं स्यादद्वैतश्रुतिभास्करः ।

सर्वद्वैतमृगं हन्तुं मृगराडिव शोभने ॥५॥
हंसमन्त्रो महामन्त्रः सोऽहं तेनैव निर्मितः ।
हकारश्च सकारश्च हित्वा भवति मन्त्रराट् ॥६॥
विंशत्येकसहस्राणि षट्शतानि भवार्णवे ।
जीवो जपति सर्वेषु शरीरेषु दिवानिशम् ७
हकारेण बहिर्याति सकारेण विशेत्पुनः ।
हंस हंसेत्यमुं मन्त्रं जीवो जपति सर्वदा ॥८॥
प्रणवोधनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥९॥
प्रणवंहीश्वरं विद्यात्सर्वस्य हृदि संस्थितम् ।
सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥
ॐ च द्वादशसाहस्रं प्रत्यहं यो जपेन्नरः ।
तस्य द्वादशभिर्मासैः परमात्मा प्रकाशते ११
प्रणवार्थश्शिवस्साक्षी विष्णुरूपोऽहमव्ययः ।
ये येऽर्थाः प्रणवे भान्ति ते सर्वे मयि संस्थिताः
एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।

एतद्धयेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् १३
प्राणिनां सर्वधर्माणां शास्तारमपि कारणम् ।
प्रणवेशं हि मां ज्ञात्वा सर्वपापैः प्रमुच्यते १४
प्रणवेन प्रणश्यन्ति जन्मदुःखजरादयः ।
सुशीले प्रणवे चित्तं स्थापय त्वं प्रयत्नतः १५
एकाक्षरस्वरूपेण वेदशास्त्रेषु मानिनि ।
सर्वसिद्धिप्रदानाय तिष्ठामि भगवत्प्रिये १६
आचारः प्रथमो धर्मो धर्मसंशासकोऽस्म्यहम् ।
नैवाचारविहीनस्य सिद्धिर्मन्त्रेण सत्वरम् १७
आचारेण तु पूतस्य पुरुषस्य विशेषतः ।
सिद्धिस्संजायते शीघ्रं वेदशास्त्रानुसारतः १८

॥ इति श्रीमदय्यप्पगीतायामय्यप्पशवरीसंवादे मन्त्रयोगो नाम नवमोऽध्यायः॥

-----

## || अथ दशमोऽध्यायः ||

|| शबरी उवाच ||

को धर्मस्सर्ववर्णानां बन्धविध्वंसकारकः ।
वक्तव्यं भगवन्मह्यमन्यः को वक्तुमीश्वरः ।१।

|| श्री अप्पय्य उवाच ||

निःश्रेयसं यतस्सिध्येत्पुनरभ्युदयो यतः ।
दशलक्षणधर्मस्तु सर्वेषामुपकारकः ।।२।।
सुखेदुःखे गते धैर्य्यं तथा मानापमानयोः ।
इन्द्रियाणां स्वधर्मेषु चालनं दमनं दमः ।।३।।
प्रतीकारक्षमत्वेऽपि विद्रोहसहनं क्षमा ।
परस्वहरणं चौर्य्यमस्तेयं तदभावतः ।।४।।
कस्यचित्किमपिनो हरणीयम् ।
मर्मवाक्यमपि नोच्चरणीयं
मापतेःपदयुगं स्मरणीयं
लीलया भववनं तरणीयम् ।।५।।
महतीशुद्धता शौचं स्वदेहमनसोरपि ।

शममृज्जलगन्धैश्च अनुष्ठेयं सदा नृभिः ॥६॥
इन्द्रियाणामधर्मेषु प्रवृत्तीनां निवारणम् ।
प्रवर्तनं स्वधर्मेषु निग्रहश्चावधारय ॥७॥
निर्लज्जस्य च लोकेऽस्मिन्निन्दा भवति सन्ततम्
ततो लज्जा स्वधर्मश्च कीर्तिता नितरां शुभे॥८॥
अङ्गानिवेदाश्चत्वारो मीमांसान्यायविस्तरः ।
अर्थशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥९॥
कार्याकार्यविचारेषु शास्त्रमेव विशिष्यते ।
अतो विद्या स्वधर्मस्य लक्षणं कीर्तिता मया
यथार्थकथनं सत्यं भूतानां हितमेव च ।
लौकिके परमार्थे च हरिश्चन्द्रेतिहासवत् ११
क्रोधो द्वेषो महापापी नरकद्वारविश्रुतेः ।
एतस्माद्विपरीतोऽसावक्रोधो धर्मलक्षणम् १२
क्रोधमूलो मनस्तापःक्रोधस्संसारबन्धनम् ।
धर्मक्षयकरःक्रोधस्ततः क्रोधं परित्यजेत् १३
धर्मनाशो यदा देवि चाधर्मश्चैधते यदा ।

तदा धर्मस्य शास्ताहं भविष्यामि मनोहरे १४
अकामश्चात्मकामो वा मां भजेद्धर्मपालकम् ।
शरणागतशास्तारं शबरीगिरिनायकम् १५
मातरं पितरं वापि भजेद्भक्तिपरायणः ।
गुरूणां गुरुपत्नीनामतिथीनां गवामपि ।१६।
कर्माशुभं परित्यज्य शुभं कर्म समाचरेत् ।
अन्यस्यगुणदोषाणामविचार्य दिवानिशम् १७
साधूनां समचित्तानां सेवा कार्या तपस्विनि ।
कामक्रोधादिदोषाणां शमनन्तेन जायते १८
अन्येषामपि धर्माणां सेवाधर्मो विशिष्यते ।
सेवया वशमायाति त्रैलोक्यं सचराचरम् १९
यत्र धर्मस्तु तत्राहं यत्राहं तत्र देवताः ।
विभूतयस्सुरा यत्र वसन्ति वरवर्णिनि ।२०।

इति श्रीमदय्यप्पगीतायामय्यप्पशबरीसंवादे
धर्मयोगो नाम दशमोऽध्यायः ॥

---

# ॥ अथैकादशोऽध्यायः ॥

॥ शबरी उवाच ॥

कर्म किञ्च शुभं प्रोक्तमशुभं कर्म किम्प्रभो ।
सर्वं मे सुविनीतायै वद त्वं करुणाकर ॥१॥

॥ श्री अय्यप्प उवाच ॥

सकामैस्स्वर्गसाम्राज्यमकामैश्चात्मतोषणम् ।
शुभं कर्म च निष्कामं सकाममशुभं स्मृतम् २
कर्मणा बध्यतेजन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति चात्मवन्तो यतीश्वराः
न कर्मणा प्रजावित्तैस्त्यागेनैवामृतं शुभे ।
कर्मणांमपरित्यागे फलत्यागो विशिष्यते ४

॥ शबरी उवाच ॥

वैदिकं कर्म देवेश सकामाय निरूपितम् ।
अशुभंतत्कथं प्रोक्तं भवता केवलात्मना ॥५॥

॥ श्री अय्यप्प उवाच ॥

स्वर्गकामो यजेतात्र सकामाय निरूपितम् ।

वैदिकं कर्म वामाक्षि यद्यपि श्रुतिचोदितम् ६
कर्माकर्मविकर्मेति वेदवादो न प्राकृतः ।
वेदस्येश्वररूपत्वात्तत्र मुह्यन्त पण्डिताः ।७।
परोक्षवादो वेदोऽयमनभिज्ञानुशासनम् ।
कर्माणि कर्ममोक्षाय विधत्ते ह्यौषधं यथा ।८।
एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
सतुल्यातिशयध्वंसं यथामण्डलवर्तिनाम् ९
स्वर्गादिकफलं तुच्छं कामिनां विषयात्मनाम्
नश्वरञ्च भयव्याप्तं शुभे तच्च शुभेतरत् ।१०।
न ज्ञानभेदं जनयेदज्ञानां कर्मसंगिनाम् ।
तोषयेत्सर्वकर्माणि ज्ञानी तानि समाचरन् ॥
आलस्यं हि मनुष्याणां शरीरस्थोमहान्रिपुः ।
नास्त्युद्यमसमो बन्धुर्यंकृत्वा नावसीदति ॥
अहंकारं परित्यज्य कर्ताहमिति शोभने ।
कर्तव्यं कुरुलोकानां कल्याणाय निरन्तरम् ॥
रक्षणाय च वेदानां शिक्षणाय सुरद्विषाम् ।

अवतीर्णोऽस्मि देशेऽस्मिन् चन्द्रशेखरतेजसा
पापं हन्ति विषं हन्ति विषयानपि दुर्गुणान्।
शूलरोगादि सर्वं च हन्ति मे दर्शनं शुभम्॥
चतुर्णां पुरुषार्थानां साधिकाजगतीतले।
चरित्रस्यापि कीर्तेर्मे सुभगे शरणागतिः १६
कर्मासक्तोयजेच्छक्तिं ज्ञानासक्तोयजेद्गुरुम्
मोक्षासक्तोयजेच्छम्भुं सर्वासक्तस्तु मां यजेत्
फलेच्छारहितं कर्म यत्तुनिष्कामिना कृतम्।
तत्सर्वम्मङ्गलं देवि सर्वमन्यद्विडम्बनम्॥१८

॥ इति श्रीमदय्यप्पगीतायामय्यप्पशवरीसंवादे कर्मयोगोनामैकादशोऽध्यायः ॥

---

## ॥ अथ द्वादशोऽध्यायः ॥

॥ श्री अय्यप्प उवाच ॥

अद्रोही पुण्यशीलश्च ब्रह्मचारिव्रते स्थितः।
मन्नामजपचित्तात्मा गुरुसेवापरायणः ॥१॥
ज्ञानविज्ञानपूतात्मा सुराणामपि दुर्लभम्।

प्राप्नोति परमं स्थानं चिन्मयं निर्गुणं शिवम्
शुभवैराग्यमास्थाय प्राणायामविधानतः ।
अहिंसयाचभूतानां मुनिवृत्त्याजितेन्द्रियः ३
पञ्चक्लेशनिवृत्त्यर्थं पुण्येन बहुजन्मनाम् ।
यतते स्वात्मलाभाय विचारेण समाधिना४
मद्भक्तलक्षणं देविप्राणिनामुपकारिता ।
कर्मणा मनसा वाचा सर्वान्प्रति च नम्रता ५
काम एव महाशत्रुस्सर्वेषामुपरि स्थितः ।
भक्त्यास्यजयमायाति भक्तस्य मम भामिनि
जिते कामेजितः सर्वः क्रोधादिर्दुर्गुणः शुभे ।
अमलात्माततश्शान्तो योगिराजो भविष्यति
ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत ।
इति वैदिकसिद्धान्ते विशदं विपिनेचरि ॥८॥
अन्योन्यमुपकारेण जीवनं शुद्धजीवनम् ।
अतो दानं प्रशंसन्ति देवा गन्धर्वमानवाः ।९।
सुवर्णं रजतं वस्त्रं मञ्जूषापशुकम्बलम् ।

वापी च सदनं क्षेत्रं भूषणं वाहनादिकम् १०
नैतानि सममन्नेन दत्तेनापि विवेकिने ।
अन्नदानेन सन्तुष्टो भविष्यामि विशेषतः ११
आत्मा तु निर्गुणस्साक्षान्निर्विकारोऽयमव्ययः
मायामयमिदं विश्वं त्रैगुण्यं वेत्ति पण्डितः १२
गुणातीतपदं प्राप्य शान्तो भवति योगिराट् ।
तस्मात्त्वमरविन्दाक्षि स्वात्मानं निर्गुणं स्मर ॥
आत्मतत्वन्न जानाति लोकतत्त्वविचक्षणः ।
पण्डितोऽपि स मूर्खो हि जन्ममृत्युवशङ्गतः १४
रजो धूनय सत्वेन रजसा च तमो जय ।
समाधिनाजयेस्सत्वं तत्त्वं वनचरेश्वरि ॥१५॥
सत्वतो ज्ञानमायाति रजसो लोभतस्करः ।
प्रमादमोहौ भवतस्तथाज्ञानं तमोगुणात् १६
सत्वादूर्ध्वगतिर्भद्रे रजसा मध्यवर्तनम् ।
तमसोऽधोगतिर्देवि गुणानां वशवर्तिनाम् १७
गुणेभ्योऽन्यन्न कर्तारं दर्शकश्चानुपश्यति ।

आत्मानं वेत्ति तत्त्वेन तदा ब्रह्मपदंव्रजेत् १८
कर्ताहश्च सुभोक्ताहं सुखितो दुःखजीवनः ।
इतितद्गुणमाहात्म्याज्ज्ञायते व्यवहारतः १९
इति श्रीमदय्यप्पगीतायामय्यप्पशबरीसंवादे गुण
योगो नाम द्वादशोऽध्यायः ॥

---

## ॥ अथ त्रयोदशोऽध्यायः ॥

श्री अय्यप्प उवाच

यथा वृक्षस्य बीजेऽस्मिन्महान् वृक्ष उपस्थितः ।
तथा ब्रह्मणि सर्वे च भूचराः खेचरादयः ॥१॥
बीजादपि सुसूक्ष्मा।या शक्तिरत्र विराजते ।
तथा ब्रह्माणि माया तु चानिर्वाच्यपदे स्थिता २
बीजाद्भिन्ना न तच्छक्तिर्विचारेण विना तु या
दृश्यते तु तथा माया ब्रह्मभिन्ना न दृश्यते ३
वृक्षश्शाखा ततः पत्रं कुसुमानि फलानि च ।
हिरण्यगर्भस्सूत्रात्मा चेश्वरो जीवको विराट् ४

वृक्षाधस्स्था यथा छाया वातेन परिवर्त्तिता ।
सुखदुःखे तथा विश्वे कर्मणा परिवर्तिते ॥५॥
ब्रह्म बीजं जगद् वृक्षो जनितो मायया पुरा ।
अस्य बीजविचारेण पूर्णोऽहं पुरुषोत्तमः ॥६॥
अपो विना न वृक्षस्य जीवनं जगदन्तरे ।
अय्यप्पेन विना जीवा न जीवन्ति जगत्त्रये ७
क्षुत्पिपसे च प्राणानां धर्मौ दुःखं सुखं तथा।
स्वान्तस्यैव न देहस्य सूक्ष्मस्य नहि देहिनः८
जपाकुसुमसंसर्गान्मणौ तिष्ठति रक्तिमा ।
तथा हि देहसंसर्गात्सुखं दुखमिहात्मनि ९
सत्सङ्गेन कुठारेण विचारेण च मानवि ।
मूलाज्ञानमहावृक्षं छित्वा कैवल्यमाचर ।१०।
निर्वेदासिःकरे यस्य संसारः किं करिष्यति ।
रागोयद्यस्ति पुंदेहे सच्छास्त्रं किंकरिष्यति ११
रागद्वेषविहीनस्य भक्तस्य परमात्मनः ।
निर्वेदासिःकरेयस्य सफलं वेद शासनम्।१२।

नित्यमेकाक्षरं योगी व्याहरन् ब्रह्म चो मिति ।
तदर्थं च हृदि ध्यायन् प्रयाणे परमं पदम् १३
जपयज्ञो महायज्ञो ज्ञानयज्ञस्ततः परं ।
अग्निसेवनयज्ञस्तु स्वर्गमात्रफलप्रदः ॥१४॥
ज्ञानेनाध्यात्मिकं दुःखमाधिभौतिकमेव च ।
अधिदैवञ्च हे देवि समूलञ्च प्रणश्यति॥१५॥
श्रवणं मननं तस्य निदिध्यासनमेव च ।
साधनानि मुमुक्षूणां श्रुतीनां गुरुवाक्यतः १६
गुरुतीर्थाम्भसि स्नातो विरागतिलकीकृतः ।
विचारधनुरादाय हिनस्त्यज्ञानतस्करम् १७
अनेन कृतकृत्यत्वमाप्नुयात्साधको यदि ।
सुशीलश्चाकृतद्रोहः सर्वभूतहिते रतः ॥१८॥

॥ इति श्रीमदय्यप्पगीतायामय्यप्पशबरीसंवादे
ब्रह्मदर्शनयोगो नाम त्रयोदशोऽध्यायः ॥

---

# ॥ अथ चतुर्दशोऽध्यायः ॥

॥ श्री अय्यप्प उवाच ॥

यस्य दानं दमो हिंसा तपस्सत्यमपैशुनम् ।
त्यागो दयाप्यलोलुप्त्वं क्षान्तिरक्रोधमार्दवम् १
ह्रीरचापलमद्रोहो शुचित्वन्नातिमानिता ।
आर्जवञ्चाभयं यज्ञो ज्ञानयोगदृढा मतिः॥२॥
स्वाध्यायश्चित्तनैर्मल्यं क्षमा तेजो धृतिश्शुभे ।
मोक्षधर्मस्य तस्यैता दैवीप्रकृतिसम्पदत ॥३॥
पुण्यशीलस्य विप्रस्य तपसा बहुजन्मना ।
भाग्येन जायते दैवी प्रकृतिर्मोक्षदायिनी ४
दर्पोऽभिमानताज्ञानं क्रोधः परुषभाषणम् ।
अनीश्वरत्वं विश्वस्य ममत्वं भोगवस्तुषु ॥५॥
अधर्मेण धनप्राप्तौ रुचिस्सज्जनशत्रुता ।
विष्णुभक्तःशिवद्रोही शिवभक्तो हरिद्रुहः ।६।
कलहित्वञ्चदुर्बुद्धिः कामिन्यां काञ्चने रतिः ।
मायावीच सुरद्रोही परमार्थपराङ्मुखः ॥७॥

आसुरीप्रकृतेर्जातलक्षणं ह्यनुवर्णितम् ।
समासेन विशालाक्षि मोक्षमार्गभयङ्करम् ८
अनाचारेण शास्तारं भगवन्तन्न पश्यति ।
अतो धर्मविचारेण कालन्नयति बुद्धिमान् ६
माता धर्मः पिता धर्मो धर्मो नौर्भवसागरे ।
लोकेऽस्मिन्परलोके च धर्मस्सर्वस्य रक्षकः ॥
प्राणत्यागे भयं नास्ति धर्मत्यागे भयंस्मृतम् ।
तस्मात्स्वधर्मो न त्याज्यः सुखसाम्राज्यभास्करः
आसुरीं प्रकृतिं हित्वा दैवीं प्रकृतिमाश्रयेत् ।
आसुरी कुटिला दुष्टा दैवी मङ्गलशालिनी १२
प्रतिबिम्बंजले शुद्धे दृश्यते च कलानिधेः ।
परिशुद्धमनस्यात्मा दृश्यते तु तथा सताम् १३
सुभूषणादिकं व्यर्थं केवलं वसनं विना ।
सुव्याख्यानादिकं व्यर्थं निजात्मानुभवं विना
स्वात्मानुभवयुक्तस्य चाचार्यस्य प्रसन्नवाक् ।
सफला तु भवेदत्र शुक्तौ सुस्वातिबिन्दुवत् १५

सन्तोषेण विना सौख्यं न भूतं न भविष्यति।
सन्तोषधनमादाय यथालाभेन तुष्यतु॥१६॥
आत्मारामः क्षमा सीता क्रोधोरावणपत्तनम्।
सागरः कामलोभादिर्हनुमान् ब्रह्मचिन्तनम् ॥
सेवया जगदीशस्य गुरोश्च परमात्मनः।
कामक्रोधादिकं सर्वं क्षणाज्जयतिसाधकः।१८।

इति श्रीमदय्यप्पगीतायां अय्यप्पशबरीसंवादेऽ
मरासुरसम्पद्विभागयोगोनाम चतुर्दशोऽध्यायः



## ॥ अथ पञ्चदशोऽध्यायः ॥

॥ श्रीअय्यप्प उवाच ॥

श्रद्धालवोऽत्र सर्वत्र वैदिकेष्वधिकारिणः।
तेषाञ्चोक्तफलं शान्ति लभतेब्रह्मवादिनि॥१॥
संशयात्मातुपापिष्ठस्सर्वेषामुपरिस्थितः।
लोकेऽस्मिन्परलोकेऽपि न सुखं संशयात्मनः।
गुरुशास्त्रेषुविश्वासः श्रद्धाभवति सात्विकी।

स्वर्गादिफलविश्वासो राजसी सानिगद्यते ३
प्रेतादिफलविश्वासश्श्रद्धा भवति तामसी ।
एवं हि त्रिविधा श्रद्धाप्रकारान्तरवर्णिता ।४।
अश्रद्धयाकृतोयज्ञः पुण्यदानं तपश्चयत् ।
तत्सर्वं निष्फलं देवि श्रद्धाहीनेन कर्मणा॥५॥
श्रद्धयादेवदेवत्वमश्नुते दिवि सर्वदा ।
श्रद्धा प्रतिष्ठा लोकस्य श्रद्धाविर्चा महात्मनाम्६
श्रद्धैव चक्षुर्लोकेऽस्मिन्प्रतिमादेवदर्शने ।
प्रत्यक्षेण च शास्त्रेण प्रत्यक्षं वाध्यते न हि ।७।
वृष्टिं विना यथावर्षः कासारश्च जलं विना ।
श्रद्धां विनातथाधर्मो शोभते न शिवप्रिये॥८॥
सर्वं दोषमयंविद्धि मायया रचितं हि यत् ।
परमात्मनि निर्दोषे श्रद्धा कार्या प्रयत्नतः॥९॥
दोषोऽप्यस्तिगुणोऽप्यस्ति अदोषोनैव विद्यते ।
सुकोमलस्य पद्मस्य नाले भवति कण्टकः।१०।
गुणेषु रमते विद्वान् दोषेषु रमते शठः ।

पुष्पेषु रमते भृङ्गो गर्तेषु ग्रामशूकरः ॥ ११॥
शिवमक्षरमव्यक्तं करणानामगोचरम् ।
आत्मानमाखिलाधारं भावयेच्छान्तचेतसा ॥
मनएव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धनेविषयासक्तं मोक्षायाविषयम्मनः ।१३।
हित्वातुविषयाभ्यासं ब्रह्माभ्यासेन सन्ततम् ।
मनोमर्कटवद्भ्रान्तमात्मनिस्यात्सुस्थिरं यदा
शुभ्रं ज्योतिर्मयं दिव्यं शाश्वतं निर्गुणं परम् ।
योगाग्निक्षालितस्वान्तस्तदा पश्यति साक्षिणम्
दृश्यतेत्वग्र्याबुद्ध्यासूक्ष्मया सूक्ष्मदर्शिभिः ।
इतिवैदिकसिद्धान्ते दर्शितं नचिकेतसे ।१६।
चतुर्णां पुरुषार्थानां मोक्षस्यैव प्रधानतः ।
नित्यत्वादरविन्दाक्षित्रयाणां तदभावतः।१७।
श्रद्धयाभजचात्मानं जरामरणवर्जितम् ।
सोऽहं सोऽहमितिप्राज्ञिजैगीषव्यमुनिर्यथा१८

इति श्रीमदय्यप्पगीतायां अय्यप्पशबरीसंवादे
विश्वास योगोनाम पञ्चदशोऽध्यायः ॥१५॥

# ॥ अथ षोडशोऽध्यायः ॥

॥ श्री अय्यप्प उवाच ॥

भूमिषु कथं सिद्धिः कुसूलस्थयवादिवत् ।
भूमिस्थस्यभवेत्सिद्धिर्बीजस्योर्वरभूमिषु ॥१॥

॥ शवरी उवाच ॥

भूमयः कति तत्वज्ञ का सिद्धिर्विदुषां वर ।
मुमुक्षूणांहरीशात्मन् सर्वंवर्णयविस्तरात् ॥२॥

॥ श्री अय्यप्प उवाच ॥

शुभेच्छा प्रथमा ज्ञेया द्वितीया सुविचारणा ।
तनुमानस्यपिज्ञेया सत्वापत्तिश्चतुर्थिका ॥३॥
पुनःपञ्चम्यसंसक्तिः पदार्थाभावना पुनः ।
तुर्यगा सप्तमी देवि योगिनाम्मुक्तिदायिनी ४
शास्त्रसज्जनसम्पर्कान्मूढोऽहमिति या मतिः ।
वैराग्यपूर्विकेच्छायाश्शुभेच्छासुमनोहरे॥५॥
शास्त्रसद्गुरुसम्पर्कवैराग्याभ्यासपूर्विका ।
सदाचारप्रवृत्तिर्या सुभगे सुविचारणा ॥६॥

रक्तताचेन्द्रियार्थेषु विचारेण शुभेच्छया ।
यत्र सातनुतामेयादनघे तनुमानसि ॥७॥
भूमित्रयकृताभ्यासाच्चित्ते च विरतेर्वशात् ।
सत्वात्मनिस्थिते शुद्धे सत्वापत्तिर्वरानने ।८।
भुवां चतुष्टयाभ्यासाद्यासंसर्गयुता दशा ।
रूढसत्वचमत्काराद्देव्यसंसक्तिनामिका ९
भूमिकापञ्चकाभ्यासात्स्वात्मारामतयादृढम् ।
बाह्याभ्यन्तरवस्तूनां षष्ठीभूमिरभावनात् १०
पञ्चमी भूमिमध्ये तु जीवन्मुक्तो विराजते ।
ब्रह्मानन्दरसं पीत्वामत्तभ्रमरराडिव ॥११॥
षष्ठं भूतलमारुह्य शुष्कपत्रवदास्थितिः ।
स्वयन्नचेष्टते योगीयथातत्पवनेरितम् ॥१२॥
भूमिषट्कचिराभ्यासाद्द्वैतस्यानुपलम्भनात् ।
यास्वभावैकनिष्ठा सा तुर्य्याज्ञेया च भूमिका॥
इयं हि जीवन्मुक्तेषु तुर्य्यावस्थानिरूपिता ।
विदेहमुक्तिविषयंतुर्य्यातीतमतः परम् ॥१४॥

सप्तमी भूमिका देवि योगिनाम्मुक्तिदायिनी ।
तत्र गत्वा चिरं विद्वानात्मारामोविराजते १५
कृतस्य करणन्नास्ति मृतस्य मरणं यथा ।
मुक्तस्यजननन्नास्ति अमृतस्यमृतिर्यथा ।१६।
भूमिकानां स्वरूपन्तु मया साधुनिरूपितम् ।
तुभ्यङ्कमलपत्राक्षि कैवल्यप्राप्तिसाधनम् ।१७।
इयं वेदशिरोविद्या गोपनीया प्रयत्नतः ।
नचाशुश्रूषवेदेया पुत्रायाप्यविवेकिने ।१८।
मुमुक्षुगुरुभक्ताय सुशान्ताय विवेकिने ।
आहूयापि च देयेयं विद्या कल्याणकारिणी १६
इति श्रीमदय्यप्पगीतायामय्यप्प शवरी संवादे
भूमिकायोगोनाम षोडशोऽध्यायः ॥ १६ ॥

———

## ॥ अथ सप्तदशोऽध्यायः ॥

॥ श्री अय्यप्प उवाच ॥

साधनाभ्यासपाकेभ्यस्त्रिधा स्याच्छरणागतिः।
तवैवाहं ममैवासौ स एवाहमिति स्थिता १
स्वामिसेवकभावेन चात्मभावनया पुनः।
तवदासो मम स्वामी सोऽहमस्मि विचारतः २
नामगोत्रविनिर्मुक्तं सत्यमद्वैतभास्करम्।
सोऽहंसोऽहमिति स्वान्ते भजमां चिन्मयं परम् ३
शुद्धोऽस्मिबुद्धोऽस्मि सनातनोऽस्मि
संसारमायापरिवर्जितोऽस्मि।
ब्रह्मस्वरूपोऽस्मिनिरञ्जनोऽस्मि
वेदान्ततत्वार्थविकासकोऽस्मि ॥४॥
सस्यानां शरणं वृष्टिर्मत्स्यानां शरणं जलम्।
देवानां शरणंयज्ञः आर्तानां शरणन्त्वहम् ।५।
सर्वोपनिषदांसारो ज्ञानविज्ञानसंयुतः।
उपदिष्टो मया देवित्वन्मोहोविगतो न वा।।६।।

॥ शबरी उवाच ॥

तृप्तास्मि पुण्डरीकाक्ष तववाक्यामृतेन तु ।
कृतकृत्या न सन्देहो दयासिन्धोसुरेश्वर ॥७॥
देहबुद्ध्यातु दासी ते जीवबुद्ध्यात्वदंशकः ।
ब्रह्मबुद्ध्यात्वमेवाहमिति मे निश्चिता मतिः॥८

॥ श्री अय्यप्प उवाच ॥

वेदसारं परित्यज्य चान्यसारं वृणोति यः ।
मुक्ताफलंविहायासौलोष्ठं गृह्णाति दुर्मतिः ।९।
शान्तितुल्यं तपोनास्ति लोभतुल्यो न दुर्गुणः
कामतुल्यस्सतां वैरी मातृतुल्या न देवता१०
गुरुशास्त्रं विना ज्ञानं व्यञ्जनं लवणं विना ।
सुसन्ततिं विनाभार्या भूषणं वसनं विना ।११।
धर्मं विना न पाण्डित्यं विना शीलन्न यौवनम्
न शोभते विशालाक्षि वृक्षस्तुच्छदनं विना१२
स्वसंवेद्यं हितद्ब्रह्मकुमारीश्रीमुखं यथा ।
अयोगी नैव जानाति जात्यन्धो हियथाघटम्

न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
मोक्षो हि विमलं चेतस्सम्यग्ज्ञानविबोधितम् ॥
भक्तिभाजनमादाय गत्वा गुरुनदीतटे ।
विज्ञानपयसो देवि चात्मानमभिषेचय ।१५।
आत्मानश्चेद्विजानीयादहमस्मीतिपूरुषः ।
किमिच्छन्कस्यकामाय शरीरमनुसंज्वरेत् ॥
सत्यं ज्ञानमनन्तं यद्ब्रह्मलक्षणमुच्यते ।
आत्मा तु सच्चिदानन्द एकत्वमुभयोरपि ।१७।
तमेव शरणं गच्छ सर्वभावेन भामिनि ।
तत्प्रसादत्परां शान्तिमचिरेणाधिगच्छसि।१८।

इति श्रीमदय्यप्पगीतायामय्यप्पशरीरसंवादे
शरणागतियोगोनाम सप्तदशोऽध्यायः ॥१७॥

---

## ॥ अथाष्टादशोऽध्यायः ॥

॥ श्री शबरी उवाच ॥

श्रेणी ते प्रथमा तु सर्वजगतां
सन्धारिणी मेदिनी ।

सोपानस्य तथाऽपरा सुविमला तत्वं
जलं शोभनम् ॥
तेजस्तस्य तृतीयका च तमसो
राशेरलं भक्षकम् ।
भूयो वायुरलङ्करोति भगवन्
व्योमस्थिता पञ्चमी ॥१॥
षष्ठी तस्य विराजते तु रुचिरा
श्रेणी तु वाणी शुभा ।
भूयः पाणियुगञ्च मङ्गलमयी
सास्यादनङ्गारिज ॥
पादौ चापि सुगण्यते सुरगुरो
श्रेणीपुनश्चाष्टमी ।
पायुश्चेन्द्रियमस्य सुष्ठु नवमी
सञ्जायते शङ्करी ॥२॥
रम्यं ते खलु तस्य देव दशमी
श्रेणीच शिश्नेन्द्रियम् ।

श्रोत्रं चात्र प्रचण्डशास्त्रकुशलश्चै-
काद्शी श्रेणिका ॥
त्वग्भूयोऽपिचशोभनारसपते-
तत्वं परं द्वादशी ।
चक्षुश्चापि सुरूपदर्शनकरं जेगी-
यते श्रेणिका ॥३॥
घ्राणश्चैव चतुर्दशी परतरं
गन्धोद्वहं सा शुभा ।
स्वाद्वस्वादुविचारणे च रसना
जिह्वाग्रदेशस्थिता ॥
श्रीणीपञ्चदशी मनोमननकृच्छ्रेणी
वराषोडशी ।
बुद्धिर्बोधकरी सदाशुभकरी श्रेणी
मनोमोदिनी ॥४॥
श्रेणीते परिमार्जिता सकलदा
कामप्रवाहानला ।

सोपानस्य विराजतेऽतिजयिनी
जीवात्मतत्त्वेन या ॥
श्रीशेशात्मजनस्यपन्तलपतेरी
शस्य शान्तिप्रदा ।
इत्यष्टादशतत्त्वमच्युतपदस्थानं-
हिवन्दे मुदा ॥५॥
नीलालङ्करणैस्सुशोभिततनु-
र्विद्या विनोदप्रियो-
ब्रह्मोद्योतलसन्मुखेन तिमिरं
दूरीकरोति स्वयम् ॥
हस्ताग्रे कृतमुद्रयानिजसुखं
सम्बोधयन् शाश्वतम् ।
अय्यप्पो जयति प्रपञ्चपतितान्
सन्तारयन् सन्ततम् ॥६॥
श्रीमातापरमात्मनो भगवतस्स-
म्मोहिनी मोहिनी ।

कैलासाद्रिनिकेतनोऽस्य जनकश्श्री
विश्वनाथः प्रभुः ॥
उत्तुङ्गे शबरीगिरौ परिलसन्नीला-
म्बराडम्बरः ।
अय्यप्पश्शरणागतान्निजजनान्
रक्षन्मुदा शोभते ॥७॥
आत्मज्ञानविचारकार्यकुशले
वेदार्थचिन्तामणौ ।
आकारादिविवर्जितेऽपि सगुणे
भक्तप्रियार्थे विभो ॥
कान्तरेमृगयार्थमत्रचरतः शान्तस्य
भक्तात्मनः ।
आदौपन्तलभूपतेर्निपतितं सच्चि-
त्सुखेदर्शनम् ॥८॥
लीलां तस्य नृपस्य वेश्मनि चिरं
कृत्वा वनं संश्रितः ।

अत्रत्वत्पदपङ्कजे निपतितुं
चायान्त्यसंख्या जनाः॥
त्वत्पादस्मरणं विधायविधि-
वन्मत्तेभहिंस्रात्मनाम् ।
श्रुत्वा शब्दमनन्यभक्तिविषया
भक्ताश्शरण्ये त्वयि ॥९॥
पुत्रत्वं गतवान् भवानखिल-
विद्भूपस्य भाग्येन वै ।
शौर्य्यं त्वद्गुणशान्तिदान्तिनिकरं
संवीक्ष्य राज्ञी भिया ॥
अय्यप्पो यदि मद्गृहे निजसुतो
नाप्नोति राज्यासनम् ।
कापट्यं खलु निर्मितं भगवतश्शास्तु-
स्तया नाशने ॥१०॥
अय्यप्पो जगतां गुरुस्सकल-
विद्वेदान्तवागीश्वरः ।

मायानिर्मितराज्यभारविषये
वैराग्यवानात्मदृक् ॥
अद्वैतं सकलं चराचरमिदं
विज्ञायते विद्यया ।
आत्मारामपदप्रबुद्धमनसो
राज्यादिलाभेन किम् ॥११॥
त्वल्लीलास्थलिकाविभातिपशु-
भिर्देवैश्च वृन्दावनम् ।
भेदस्तत्रतु भोगरीतिरहिता-
वागीश्वरी राधिका ॥
गोभिर्नैवतु पुण्डरीकनिचयैः
पम्पा कलिन्दात्मजा ।
श्रीकृष्णस्तु न चेशविष्णुतनयो
वंशी न वेदध्वनिः ॥१२॥
आश्चर्यं तव विश्वनाथचरितं हत्वा
सुरद्रोहिणम् ।

तुल्यं देवमनुष्यभूतनिकरं
रामेण विश्वं पपौ ॥
धर्मोपद्रवकारिदेहदहने
प्रत्यक्षदावानलः ।
त्वद्भक्तद्रुमकोटिरक्षणपटुः
कादम्बिनीवात्मवान् ॥१३॥
आनन्दाम्बुधिवर्धनं शिवगुरोः
पापाग्निनिर्वापणम् ।
ध्यानं तस्य महात्मनो हृदि सतां
कल्याणकल्पद्रुमम् ॥
त्वन्नामस्मरणं हि सर्वसुखदं
रूपं सदामङ्गलम् ।
अप्यप्पस्य सुधर्मगोप्तुरमरैर्गीतस्य
विश्वात्मनः ॥१४॥
सत्यं शाश्वतमप्रमेयमनघं
निर्वाणशान्तिप्रदम् ।

कामक्रोधमदप्रभञ्जनकरं
देदीप्यमानं सदा ॥
चिन्मुद्रावलयेन वेष्टिततनो-
रानन्दराशेर्विभोः ।
अय्यप्पस्य पदारविन्दयुगलं वन्दे
मुनीन्द्रैर्नुतम् ॥१५॥
विज्ञानार्णवमौक्तिकोऽसि भगवन्
ज्ञानप्रवालोऽथवा ।
नीरक्षीरविवेकचारुकुशलो-
हंसोऽसि दुग्धार्णवे ॥
त्वद्वक्त्रामलशीतलारसमयी-
वाणीशरच्चन्द्रिका ।
शुद्धब्रह्मपरात्परोऽसि शबरी
प्राणप्रियो राजसे ॥१६॥

॥ श्री अय्यप्प उवाच ॥

सुसंवादात्मकं शास्त्रं प्रथतामावयोस्स्वयम् ।

कीर्तिस्त्वदीयालोकेषु पर्वतायिष्यतेऽमुना १७
नमश्श्री विष्णुरूपाय शिवरूपाय तेजसे ।
अय्यप्पाय नमस्तुभ्यं नमश्श्रीब्रह्मचारिणे १८

॥ इति श्रीपूज्यपादस्वामीनारायणगिरिशिष्य
अच्युतानन्दकृतश्रीमदय्यप्पगीतायामय्यप्प
शवरीसंवादे अय्यप्पदर्शनयोगोनामा-
ष्टादशोध्यायः ॥

———

ॐ

॥ शरणमय्यप्प ॥



न्यायाचार्येण संशुद्धा
काशिकानन्दशास्त्रिणा ।
हंसिनीवाम्भसिस्नाता
गीता सरसि मानसे ॥ १ ॥

प्राप्तिस्थान—

**श्री तिलभाण्डेश्वरमठ ।**

बम्बई प्रिंटिंग काटेज, बाँस-फाटक, बनारस ।



अय्यप्परय सुपूजने कृतमतिर्योगीश्वरो विश्रुतः
श्रीमानच्युतनामको यतिपतिर्लोकोपकारी सदा ।
रुद्राक्षादिविभूषितोतिमतिमान् कौपीनमात्राश्रितः
श्रीमाण्डेश्वरशङ्करं हृदिमुदा ध्यायन्नयं शोभते ॥

## स्कूल खुले और बन्द हुए

वाराणसी सोमवार। लगभग डेढ़ महीने की छुट्टी के उपरांत आज महापालिका के सभी प्राइमरी स्कूल खुल गये सभी छोटे बड़े बच्चे बड़ी खुशी खुशी अपने अपने स्कूलों को जा रहे थे। आज प्रातः सभी स्कूल राजर्षि पुरुषोत्तम दास टंडन और

इसके बराबर कोई परीक्षा पास किए हुए होने चाहिए। जो लड़के ऐसी परीक्षा में बैठने वाले हैं या बैठ चुके हैं, वे भी उक्त परीक्षा मे बैठ सकते हैं, किन्तु उन्हें ३० जून १९६३ तक मेट्रिक पास का प्रमाणपत्र देना होगा। उम्मीदवारों का जन्म २ जनवरी १९३६ से पहले और १ जुलाई १९४८ के बाद का नहीं होना चाहिए उम्र में किसी भी उम्मीदवार को

## सन्मार्ग चन्दे का दर

| | | |
|---|---|---|
| वर्ष भरका | रु० | २५।०० |
| छमाही | रु० | १३।०० |
| तिमाही | रु० | ७।०० |
| एक महीने का | रु० | २।५० |

### केवल रविवासरीय संस्करण

| | | |
|---|---|---|
| छमाही | रु० | २।७५ |
| वर्ष भरका | रु० | ५।०० |

टेलीफोन नं० ३५



नमोऽस्तु रामाय